e-Pathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रम् (Paper Number) | 7 | |
| पत्रविषयः (Title) | वैदिकसाहित्यम् इतिहासश्च<br>(History of Vedic Literature) | |
| पाठ्यांशसंख्या पाठ्यांशनाम च<br>(Module Number & Module Name) | 02, ऋक्संहिता<br>(*Rik Samhita* : An Introduction ) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | **१. ऋक्संहितायाः परिचयः।**<br>**२. ऋक्संहितायाः महत्त्वम्।** | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो.केदारप्रसादपरोहा,<br>आचार्यः<br>विशिष्टाद्वैतवेदान्तविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली<br>110016 | डा. रामराज उपाध्यायः,<br>सहाचार्यः,पौरोहित्यविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-विद्यापीठम्, नवदेहली 110016 | प्रो.श्रीकिशोरमिश्रः,<br>आचार्यः<br>संस्कृतविभागस्य,<br>काशीहिन्दू-विश्वविद्यालयः,<br>वाराणसी |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P7_M02 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची-

८.१ स्कन्दस्वामी॥

८.२ नारायणः।

८.३ उद्गीथः।

८.४ आनन्दतीर्थः।

८.५ आत्मानन्दः।

८.६ सायणः।



## १.० प्रस्तावना–

ऋच्यते स्तूयते यया सा ऋक् तादृशीनामृचां समूह एव ऋग्वेदः। यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः। चतुर्षु वेदेषु ऋग्वेदस्य महत्त्वमतितरामस्ति। ऋग्वेदो हि धार्मिकस्तोत्राणामेको विशालनिधिः। अत्र बहुभिर्ऋषिभिः विविधैः भावभव्यैः शब्दैः विभिन्नाः देवाः सादरं स्तुताः भवन्ति। पाश्चात्त्यानां मते भाषायाः भावस्य च विचारेण अन्येभ्यो वेदेभ्य अतीवप्राचीनोऽस्त्ययमृग्वेदः। भारतीयदृष्ट्या ऋक्संहितायाः अभ्यर्हितत्वं पूजनीयता च सर्वत्र स्वीकार्यमस्ति। तैत्तिरीयसंहितानुसारेण यज्ञस्य यद्विधानं क्रियते तत्तु शिथिलं भवति किञ्च ऋग्वेदेन विहितानुष्ठानं दृढम्भवति। यथा–

**यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्, यदृचा तत् दृढमिति।**

(तै.सं. 6.5.10.3)

पुरुषसूक्तेऽपि यशोरूपी ''सहस्रशीर्षा'' मन्त्रः परमेश्वरात् सर्वप्रथमः ऋच्याविरभूत्। यथा–

**तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तत्स्माद्यजुस्तस्मादजायत॥**

अत्र ऋचः नाम ऋक्। सर्वप्रथमा संहिता ऋक्संहिताऽस्ति।

## २.० ऋक्संहितायाः वर्ण्यविषयाः–

संहितासु प्रथमा संहिता ऋक्संहिताऽस्ति। इयमृक्संहिता दशमण्डलेषु विभक्ता। अस्यां द्वितीयमण्डलादारभ्य सप्तममण्डलपर्यन्तम् एकस्यैव विशिष्टकुलस्य ऋषीणां प्रार्थना संकलिताऽस्ति। अष्टमे मण्डले प्रायशः मन्त्राः कण्वऋषिणा सह सम्बद्धास्सन्ति। नवमे मण्डले पवमानस्य अर्थात् सोमस्य विषये मन्त्राः संगृहीतास्सन्ति। ऋक्संहितायाः द्वितीये मण्डले गृत्समदः, तृतीये विश्वामित्रः, चतुर्थे वामदेवः, पञ्चमे अत्रिः, षष्ठे भरद्वाजः सप्तमे च मण्डले वसिष्ठादय ऋषयो वर्णितास्सन्ति। ऋक्संहितायाः प्रथमे मण्डले चतुर्दशवर्गास्सन्ति। प्रतिवर्गमैकैकस्य ऋषेर्वणनमस्ति। दशमे मण्डले सूक्तानां वैविध्यं दृश्यते।

ऋक्संहितायां नैके विषयाः वर्णितास्सन्ति परञ्च प्रामुख्येन ''यज्ञ'' एव मुख्यप्रतिपाद्यः। लौगाक्षिभास्करेण ''यागादिरेव धर्मः'' इत्युक्त्वा पुरुषार्थचतुष्टयस्य प्रथमसाधनभूतधर्मस्य सम्पादने यज्ञमीमांसा कृता। सम्पूर्णं वैदिकं कलेवरं यज्ञविषयकमिति। ऋक्संहितायाः प्रथमा ऋक् यज्ञविद्यायाः प्रतिपादनं करोति। तत्र अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातमम्। अनेन प्रकारेणात्र मुख्यप्रतिपाद्यः यज्ञः।

**३.० ऋक्संहितायां देवताविचारः-**

ऋक्संहितायां त्रिविधाः देवताः विभक्तास्सन्ति। द्यौस्थानीय- देवता, अन्तरिक्षस्थानीयदेवताः पृथ्वीस्थानीयदेवताश्चेच।

द्यौस्थानीयदेवतासु वरुणः, मित्रः, सूर्यः, सवितो, पूषन्, विष्णुः, उषस्, आश्विनादिप्रमुखास्सन्ति। यास्को वदति यत् देवतासु काचन पृथ्वीस्थानीयाः, काचन अन्तरिक्षस्थानीयाः, काचन द्युस्थानीयास्सन्ति। पृथ्वीस्थानीयदेवतास्वग्निदेवता, अन्तरिक्षस्थानीयास्विन्द्रदेवता, द्यौस्थानीयासु सूर्यवरुणप्रभृतिदेवतास्सन्ति। तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथ्वीस्थानीयः, वायुर्वेन्द्रो वाऽन्तरिक्षस्थानीयः सूर्यो द्युस्थानीयः। अग्नये सर्वाधिका ऋचस्सन्ति। सर्वाधिकैरोजस्विभिः तथा वीररसमण्डितैर्मन्त्रै इन्द्रस्य स्तुतिरस्ति। विशिष्टोदात्तभावनामण्डिताऋचः वरुणविषये समुपलब्धाः भवन्ति। देवीषु ऊषायाः स्थानमग्रगण्यमस्ति। सर्वाधिककवित्वमण्डिताः, प्रतिभाशालिन्यः, सौन्दर्याभिव्यञ्जिका ऋचः ऊषादेव्या विषये समुपलभ्यन्ते। यथा-

**अभ्रावेव पुंस एति गर्त्तारुगिव सनये धानानाम्।**
**जायेव पत्य उशती सुवासा ह्रस्वेव निरीणीते अप्सः॥**
**कन्येव तन्वा शासदाना एषि देवि देवभिपक्षमाणम्।**
**सरमयमाना युवतीपुरस्तादानिर्वशांसि कृणुषे विभाति॥**

**ऋग्वेदः- १.२३.१०**

ऋग्वेदे मित्रस्य वर्णनम् एकस्मिन् सूक्ते प्राप्यते। सूर्य आत्मा जगतस्तस्थुषश्च इत्युक्त्वा सूर्यः जगत आत्मा अस्तीति निर्दिष्टोऽस्ति। सौरमण्डले सविताायाः वर्णनमेकादशसु सूक्तेषु प्राप्यन्ते। सवितृदेवतायाः वर्णनमत्र प्रेरकदेवतारूपेण प्राप्यते।

पूषन् इत्यस्य देवस्य वर्णनमष्टसु सूक्तेषु प्राप्यते। तद्विष्णोः परमं पदम् इत्यनुसारेण सर्वेषु देवेषु विष्णुएव सर्वोच्चपदे विराजमानोरस्ति। अश्विनौयुगलदेवतारूपेण स्वीक्रियेते। ऋग्वेदस्य पञ्चाशत्सूक्तेष्वस्य वर्णनमस्ति। ऊषादेवतायाः वर्णनमृग्वेदस्य विंशतिषु सूक्तेषु प्राप्यते। रुद्रस्य कृते ऋग्वेदे त्रीणि सूक्तानि प्राप्यन्ते। मरुतः कृते त्रयस्त्रिंशत् सूक्तानि प्राप्यन्ते। पर्जन्यस्य कृते त्रयाणां सूक्तानां वर्णनं प्राप्नोति। अग्निदेवतायाः कृते द्विशतं सूक्तानि प्राप्यन्ते। सोमस्य कृते विंशत्युत्तरैकशतं सूक्तानि ऋक्संहितायां प्राप्यन्ते। अन्येषां युगलदेवतानामपि विवरणं प्राप्यते। यथा- अग्नीषोमौ, इन्द्राविष्णुः, इन्द्राग्नी इत्यादयः।

**४.० व्याख्यानपद्धतयः**

कस्यापि मन्त्रस्य सूत्रस्य वा रहस्यात्मकं ज्ञानं व्याख्यानेनैव भवति परञ्च व्याख्यानस्य परम्परा भिन्नाः भिन्नाः भवन्ति। वैदिकसाहित्यस्यादिमे ग्रन्थे ऋग्वेदे मन्त्राः प्राप्यन्ते। यावन्मन्त्राणां व्याख्यानं न भविष्यति तावत्तस्मिन् मन्त्रे व्याप्तानामर्थानां ज्ञानाभावो भवति। अतः ज्ञानपरम्परायाः विकासो भवेदेतदर्थं व्याख्यानमावश्यकम्। अत्र विविधानां व्याख्यानपद्धतीनां विचाराः क्रियन्ते।

**४.१ भारतीयपद्धतिः-**

अस्यां पद्धत्यां व्याख्यानार्थं निरुक्तस्याश्रयां नीयते। यास्कविरचितनिरुक्तादपि प्राचीनतरः निघण्टुग्रन्थोऽस्ति। तत्र वैदिकशब्दानां विस्तृतव्याख्याः प्राप्यन्ते। निघण्टुशब्दस्यार्थो भवति शब्दानां सूची। निघण्टुग्रन्थे संहितायाः क्लिष्टान् शब्दान् एकत्र संचयं कृत्वा तेषामर्थाः तत्र प्राप्यन्ते। समुपलब्धेषु ग्रन्थेषु निघण्टुरेव वेदार्थस्फुटीकरणस्य प्रथमः प्रयासः परिलक्षितः। प्रातिशाख्यानामपि रचना तत्कालिकं किं वा तत्पूर्ववर्ती नासीत्। ग्रन्थेष्वेषु वैदिकभाषायाः विचित्रपदानां, स्वराणां सन्धिपदानाञ्चैव विवेचनमस्ति। पुराऽनैकेषु ग्रन्थेषु निरुक्तविषयिणी सत्ताऽऽसीत्। येषां सूचनाऽवान्तरग्रन्थेषु यत्र तत्रोद्धरणरूपेण समुपलब्धास्सन्ति। अतः वेदार्थव्याख्यानस्य सर्वाधिकोपयुक्तः ग्रन्थः यास्कविरचितं निरुक्तमस्ति।

**४.२ यास्कमहोदयस्य पक्षः-**

ब्राह्मणग्रन्थेषु मन्त्राणां विनियोगविधानम् उदितानुवादमात्रमेवाऽस्ति। वैदिकमन्त्राणामर्थोऽनुपपन्नो नास्ति। कस्यापि वृक्षस्य यथार्थं विधिपूर्वकं शाखाच्छेदनमनुग्रहणमेव न तु हिंसेति। यस्मिन् कर्मणि पुरुषो वेदेन नियुक्तो भवति तस्मिन् कर्मण्यहिंसा भवति। वैदिकी हिंसा हिंसा न भवतीति प्रसिद्धम्।

**४.३ पाश्चात्त्यपद्धतिः-**

वेदार्थानुशीलने प्रधानतया त्रीणि मतानि सन्ति। एकं मतं पाश्चात्त्यवैदिकार्थानुसन्धित्सूनां मतम्, अन्ये द्वे भारतीयविदुषामेव स्तः। पाश्चात्त्यानां मतानुसारेण वेदार्थज्ञानाय तुलनात्मकभाषाशास्त्रस्य ऐतिह्यग्रन्थस्य चाध्ययनस्यावश्यकतास्ति। भारतेतरदेशानामाचारव्यवहाराणामध्ययनस्यापेक्षा तद्वदेवास्ति। अनेन कारणेनेयं पद्धतिः Historical Method इति नाम्नाख्यापिताऽस्ति। भारतीयपरम्परां प्रति वैदेशिकाः विद्वांसः उदासीनास्सन्ति। ते वदन्ति भारतीयपरम्परायाः पक्षधरत्वेन तेषां वेदस्य मूलार्थपर्यन्तमभिगमनमेव न भवति। पाश्चात्त्याः वदन्ति भारतीया वैदिकव्याख्यापद्धतिः जटामालादिपदक्रमपाठैः पुष्टास्ति। पाश्चोत्य-पद्धत्यां पाश्चात्त्याः वैदिकऋचां व्याख्याः कुर्वन्ति।

**४.४ आध्यात्मिकपद्धतिः-**

वेदेषु देवतानां स्थानमतिमहत्त्वपूर्णमस्ति। मानवाः प्रतिदिवसं प्रकृतिदेव्याः विविधाः लीलाः पश्यन्ति। वैदिककालस्य महर्षयस्तस्यास्तत्तल्लीलायाअनुभवं कृत्वा लिखन्ति। महर्षयः विश्वसन्ति यदासां देवतानामनुकम्पयैव सर्वाणि कार्याणि सम्पाद्यन्ते। जगति घट्यमानानां सर्वासामपि घटनानां कारणभूताः देवता एव सन्ति।

**दैवाधीनं जगत्सर्वं मन्त्राधीना तु देवता।**
**ते मन्त्राः ब्राह्मणाधीना तस्मात् ब्राह्मणदेवता॥**

ऋग्वेदे देवता प्राणिशक्तिशालित्वात् असुरा इति प्रोक्ताः।

ऋग्वेदस्यादिमे युगे बहुदेवतानां सत्ताऽसीत्। गच्छता कालेन मानसिके विकासे सति देवतास्वेकैवाधिपतिः कल्पितोऽभूत्। पुरुषसूक्तस्य सर्वेश्वरवादं स्पष्टतया दृश्यते। परं पाश्चात्यानामेषा देवता- विषये विचारो भौतिक एव।

**४.५ सायणाचार्यस्य पद्धतिः-**

सायणाचार्यस्य व्याख्यानपद्धतिः षडङ्गाध्ययनपुरस्सरं दृश्यते। ऋक्संहितायाः प्रथमाष्टकस्य व्याख्यायां शब्दानां पर्यालोचने व्याकरणस्य नैपुण्येन निरूपणं कृतमनेन। प्रायः प्रतिमहत्त्वपूर्णं शब्दस्य व्युत्पत्तिः, सिद्धिः, स्वरादीनां च वर्णनं पाणिनीयसूत्राणां साहाय्येन प्रातिशाख्यसाहाय्येन च कृतम्। सायणभाष्ये निरुक्तस्याप्युपयोगः दृश्यते। सायणमहोदयः ऋग्वेदस्य प्राचीनभाष्यकर्तृणां स्कन्दस्वामीमाधवादीनामप्यर्थान् यथावकाशे ग्रहणमकरोत्। कल्पसूत्राणां प्रयोगः स्वभाष्ये सविस्तरं कृतवन्तस्सन्ति। यज्ञविधाने सायणस्य प्रगाढप्रतिभा दृश्यते। सायणेन कल्पसूत्रविषयगतानामावश्यकतत्त्वानां वर्णनं प्रामाणिकग्रन्थानामुद्धरणपुरःसरमकरं। अनेन कारणेन सायणः वेदभाष्यस्य गौरवोऽस्ति।

**४.६ श्रीमदरविन्दस्य पद्धतिः-**

सम्प्रति तत्त्वचिन्तनेषु अध्यात्मसाधकेषु चारविन्दमहोदयाः मान्यास्सन्ति। एतेषां महोदयानां मते येषां विदुषां वेदानां प्रति श्रद्धास्सन्ति तेषां सम्मुखे स्वत एव वैदिकशब्दानां अर्थः स्फुटो भवति। वेदस्यार्थः रहस्यात्मकः निगूढश्चास्ति। श्री अरविन्दमहोदयानामनुसारेण योगेन तपसा च विधूते पवित्रतमे हृदि एव स्फुरितो भवति वेदार्थः। वैदिकशब्दः आध्यात्मिकतत्त्वस्यैव निश्चयेन प्रतीकोऽस्ति। यथा वेदे गौ शब्दः प्रकाशस्य प्रतीको भवति। श्रीमद्भागवतेऽपि प्रतिपादितः परोक्षवादो वेदोऽयम्। अर्थात् शाब्दिकोऽर्थः भिन्नः तात्विकोऽर्थः भिन्नः। यथा- वैदिकऋषिः कस्मिन्नपि मन्त्रे अश्वाय प्रार्थनां करोति तदा तस्यार्थः अश्वरूपः सामान्यघोटको न भवत्यपित्वश्वपदेन तत्रान्तर्बलस्य प्रस्फुरणं प्रति सङ्केतो भवति। घृतशब्दः यज्ञस्य साधनभूतः सामान्यस्यावबोधं करोति। अत्रारविन्दमते घृ-प्रकाशो भवति अत एव इन्द्रस्याश्वः यदा घृतस्नु पदेन बोधितो भवति तदा तस्यार्थः घृतस्य क्षरणं न भवत्यपितु प्रकाशस्य

सर्वस्य सर्वत्र विकीर्णकर्ता एवार्थः। अग्निपदेन न केवलं बाह्यवह्निपदस्य बोधो भवत्यपित्वग्निशब्दादत्रान्तः करणस्य स्फुरितस्य चैतन्यस्यैव बोधो भवति। अनेन प्रकारेण अरविन्दमहोदयस्य पद्धतिः अतीवाधुनिकी दृश्यते।

**५.० वेदाविर्भाविकालविचारः-**

विश्वस्य सर्वप्रथमं साहित्यमस्ति ऋग्वेदः। अस्याविर्भावकालस्य प्रत्यक्षतया प्रमाणं न प्राप्यते। भारतीयाः विद्वांसः वेदान् अपौरुषेयं वदन्त्येतावता अत्र ऋग्वेदस्याविर्भावकालस्य विचारः न सञ्जातः। अस्मिन् विषये पाश्चात्यानां मध्ये मैक्समूलरमहोदयाः वेदानां कालनिर्णेतुं श्लाघ्यः प्रयासः कृतवन्तः। अस्यानुसारेण (1150) पञ्चाशदुत्तरैकादशशतमे ई.पूर्वे ऋग्वेदस्य रचना जाता। सर्वेषां विदितमस्ति बौद्धधर्मस्योदयात्पूर्वं वैदिको धर्म आसीत् यतोहि बुद्धेन वेदानां, ब्राह्मणानामुपनिषदानाञ्च ग्रन्थानां कृते स्वविचाराः कट्वी आलोचनाश्च कृतम्। बुद्धस्य कालः (500) पञ्चशतं ई0पू0 मन्यते। वैदिकसाहित्ये चत्वारि युगानि सन्ति छन्दोयुगम्, मन्त्रयुगम्, ब्राह्मणयुगम् सूत्रयुगञ्च। प्रतियुगं वर्षशतद्वयात्मकः कालः कल्पितः। अनुमानतयेदं कालं निर्धारितम्। परञ्च (1889) ऊननवत्युत्तराष्टादश शततमे खीष्टाब्दे भौतिकधर्मव्याख्यायां जिम्फोर्टव्याख्यानमालायां विदुषां मतमासीत्- नात्र भूतले काऽपि शक्तिरीदृशी या वैदिकरचनायाः कालो वक्तुं शक्नोति निश्चप्रचतया।

''ऋग्वैदिक इण्डिया'' इत्यस्मिन् पुस्तके अविनासचन्द्रस्य मतं भूगर्भशास्त्रीयतत्त्वानां घटनामवलम्ब्य सप्तविंशतिसहस्राब्दा अतिक्रान्ता इत्यस्ति। लोकमान्यबालगंगाधरतिलकमहोदयाः डॉ. याकोबीमहोदयाश्च ज्योतिषतत्त्वानामाधारीकृत्य ऋग्वेदस्य रचनाकालः चतुर्विंशतिशतं वर्षाणि मन्यन्ते।

शङ्करबालकृष्णदीक्षितस्य मतं विद्यते शतपथब्राह्मणस्याधारीकृत्य, त्रिसहस्रम् ई.पू. काले शतपथब्राह्मणस्य रचनाऽभवत्। शतपथब्राह्मणतः तैत्तिरीयासंहिता प्राचीनाऽस्ति। ऋग्वेदः तैत्तिरीयसंहिताया अपि प्राचीनोऽस्ति। ऋग्वेदस्य कालमनेन मतेन पञ्चाशतमुत्तरत्रिसहस्राणि वर्षाण्याकलितानि।

सप्तोत्तरेकोनविंशतितमे शताब्द्यां डॉ. हूगोविन्कलरमहोदया "बोधाण् कोड" इति स्थाने वर्त्तमाने टर्कीदेशान्तर्गते एकं शिलालेखमवाप। तेनानुसारेण वेदानां कालः द्विसहस्रम् ई.पूर्वमध्ये सिद्ध्यति।

ऋग्वेदस्य प्रसिद्धनदीसूक्ते गङ्गाया अतिसंक्षिप्तवर्णनमस्ति। तत्र पञ्चनदप्रदेशे शीतस्य प्राबल्यमासीदित्यपि प्रतीयते। भूतत्त्वज्ञानां विचारानुसारेणेयं वार्ता पूर्वपाषाणयुगस्य विद्यते। अस्य कालः ख्रीष्टात् पञ्चाशतसहस्रादारभ्य पञ्चविंशतिसहस्रमभिव्याप्य वर्तते।

**६.० ऋक्संहितायाः शाखाविचारः-**

भाष्यकारेण पतञ्जलिनोक्तम्- चत्वारो वेदाः साङ्गाः सरहस्याः बहुधाः भिन्नाः। एकशतमध्वर्युशाखाः सहस्रवर्त्मासामवेदः। एकविंशतिधावाहवृच्यम्। नवधाऽथर्वणो वेदः। अस्यानुसारेण ऋग्वेदस्यैकविंशतिः शाखाः निर्दिष्टाः। परञ्चेदानीं केवलं पञ्चशाखाः प्राप्यन्ते। आसां नामानि शाकलशाखा, वाष्कलशाखा, आश्वलायनशाखा, शाङ्खायनशाखा मण्डूकायनशाखाश्च सन्ति।

**६.१ शाकलशाखा-**

ऋक्संहितायाः प्रचलिता शाखा विद्यते शाकलशाखा। सम्प्रति शाकलसंहिता एव ऋक्संहिता अस्ति। अत्र मण्डलक्रमानुसारेण दशमण्डलानि, पञ्चाशीत्यनुवाकानि, अष्टाविंशत्युत्तरसहस्राणिसूक्तानि च सन्ति। अत्र अशीत्युत्तरपञ्चशताधिकदशसहस्राणि (10580.5) मन्त्राः, षड्विंशदुत्तराष्टशताधिकं त्रिपञ्चाशदधिकैकलक्षं (153826) शब्दाः द्वात्रिंशत्सहस्राण्युत्तरचतुर्लक्षान्यक्षराणि (432000) च सन्ति। अष्टकक्रमानुसारेणाष्टाष्टकानि, चतुष्षष्ट्याध्यायाः षडाधिकद्विसहस्राणि (2006) वर्गाश्च सन्ति। मन्त्राणां समूहः वर्गोऽस्ति। शाकलसंहितायामन्ते ऋक्परिशिष्टनाम्नः षट्त्रिंशतसूक्तानि सङ्गृहीतानि सन्ति। सूक्तेष्वेषु कतिपयानि सूक्तानि नितान्तप्रसिद्धानि सन्ति। यथा श्रीसूक्तम्, मेधासूक्तम्, शिवसङ्कल्पसूक्तम् रात्रिसूक्तञ्च।

**६.२ वाष्कलशाखा-**

वर्तमाने वाष्कलशाखायास्संहिता उपलब्धा नास्ति परञ्चास्याः वर्णनं ग्रन्थेषु प्राप्यते। शाकलीयानुसारेण ऋग्वेदस्यान्तिमो मन्त्रः "समानी व आकूति" अस्ति

किञ्चवाष्कलसंहितानुसारेण "तच्छ्रेयोरावृणीमहे" इत्यन्तिमो मन्त्रो विद्यते। वाष्कलशाखायां सप्तदशाधिकसहस्रसंख्यकानि सूक्तानि सन्ति। कतिपयग्रन्थानामनुसारेण वाष्कलशाखा अपूर्णाऽस्ति।

**६.३ आश्वलायनशाखा-**

सम्प्रत्याश्वालायनशाखा अनुपलब्धाऽस्ति। सप्तदशशताब्द्या आचार्या आसन् कवीन्द्राचार्यमहोदया:। ऐतेषामाचार्याणां सूच्याम् आश्वलायनशाखाया उल्लेख: स्पष्टरूपेण प्राप्यते। विद्वांस: वदन्ति सम्प्रति अस्या: शाखाया: गृह्यसूत्रश्रौतसूत्रादिकञ्च समुपलब्धास्सन्ति। आश्वलायनसंहितानां ब्राह्मणनाञ्चोपलब्धि: कस्मिश्चित् समये अवश्यमेवासीदिति वैदिकवाङ्मयस्येतिहासे लिखितमस्ति।

**६.४ शाङ्खायनशाखा-**

शाङ्खायनशाखाया: संहिता अनुपलब्धाऽस्ति। परञ्च ब्राह्मणारण्यकौ प्राप्येते। आलोचकानां मतानुसारेण शाङ्खायनस्तथा कौषीतकि शाखा एकैवास्ति परञ्च भिन्ने स्त:। वैदिकवाङ्मयस्येतिहासे लिखितमस्ति शाङ्खायनसंहिताया: प्रकाशितशाकलशाखया सह भेदो नास्ति। केवलं मन्त्राणां क्रमे भिन्नता वर्तते।

**६.५ माण्डूकायनशाखा-**

अस्याः शाखायाः ग्रन्था अनुपलब्धास्सन्ति। यस्मिन् कस्मिन्नपि ग्रन्थेष्वस्याः शाखायाः नामोल्लेखने अस्तित्वस्यावबोधो भवति। अस्याः कृते- Shakhas at the Rigveda in the .......... vol. no-1 p.p- पञ्चत्रिंशदुत्तरद्विशततमात्-त्रिपञ्चाशदुत्तरद्विशततमं यावत् पृष्ठं (235-253) द्रष्टुं शक्यते इति।

**७.० पाश्चात्त्यवैदिकविद्वान्सः-**

पाश्चात्यविदुषां वैदिकाध्ययनस्य प्रवृत्तिः सप्तदशशताब्द्या उत्तारार्द्धे प्राप्यते। चतुरशीत्युत्तरसेप्तदशशततमे (1784) ईस्वीये वर्षे सरविलियमजोन्समहोदयैः ''बंगाल एशियाटिक- सोसायटी' इत्याख्यं शोधसंस्थानं प्रारभत्। तस्मादेवकालात् पाश्चात्त्येषु वैदिकवाङ्मयं प्रति रुचिरुत्पन्नोऽभूत्। एकदा Henry Thomas Colebrooke महोदयैः ''हिन्दुओं के धार्मिक ग्रन्थ वेद'' इत्याख्यः शोधनिबन्धः प्रस्तुतः। कोलब्रुकमहोदया इतः पूर्वं संस्कृतस्य विरोधिन आसन्। परञ्चानन्तरमेतेषां महोदयानां मानसं परिवर्तितञ्जातम्। संस्कृतवाङ्मये विज्ञानस्यान्वेषणं कृतमेभिः।

**७.१ यूजिन वर्नफ-**

वर्नफमहोदयाः ''पेरिस'' इत्यस्य ''कालेज द फ्रान्स'' इत्यस्मिन् संस्कृतस्य प्राध्यापका आसन्। अनेनैव यूरोपमध्ये वेदाध्ययनस्याधारशिलायाः स्थापनं कृतम्। डॉ. वर्नफमहोदयानां व्याख्यानं प्रायशः ऋग्वेदस्योपर्याधारितमासीत्। अस्यां कक्षायां उत्तमगुणैर्युक्ताः छात्रा अधीतवन्त आसन्। महोदयस्यास्य द्वौ शिष्यौ स्तः रुडल्फराथमहोदयाः मैक्समूलरमहोदयाश्च।

**७.२ रुडल्फराथ (१८३१-१८९५)**

राथमहोदयाः वर्नफमहोदयानां शिष्यः आसन्। अष्टचत्वारिंशदुत्तराष्टादशशततमे (1848) ख्रीष्टाब्दे ''वैदिक साहित्य एवं इतिहास'' इति नाम्ना महत्त्वपूर्णग्रन्थस्य प्रणयनं कृत्वा वेदाध्ययनस्यारम्भः जर्मनीदेशे कृतमनेन। संस्कृतमहाकोषस्यापि निर्माणमेभिः कृतम्। वेदानामर्थावबोधाय भाषावैज्ञानिकी एवं तुलनात्मकेतिहासपद्धतौ विशिष्टं महत्त्वं प्रदत्तम्।

**७.३ मैक्समूलरः-**

वर्नफमहोदयस्य द्वितीयः शिष्य आसीत् मैक्समूलरमहोदयः। जर्मनदेशस्य डेंशो नामके स्थले (06 दिसम्बर 1823) दिसम्बरमासस्य षट्तारिकायां त्रयोविंशत्युत्तराष्टादशशततमे ख्रीष्टाब्दे मैक्समूलरमहोदयस्य जन्म अभवत्। गुरोः प्रेरणया सायणभाष्येन सह ऋग्वेदस्य प्रकाशनस्यायोजनमेभिः कृतम्। (1849-1875) एकोनपञ्चाशदुत्तराष्टादशशततमात् पञ्चसप्तत्युत्तराष्टादशशततमम् ईस्वीं यावदस्य प्रकाशनं कार्यं पूरितञ्जातम्। (1890-92) नवत्युत्तराष्टादशशततमात् द्विनवत्युत्तराष्टादशशततमे ख्रीष्टाब्देऽस्य द्वितीयं संस्करणं प्रकाशितम्। एतदतिरिक्तं ''प्राचीन संस्कृत साहित्य का इतिहास'' एवं ''भारत से हम क्या सीखें'' इत्यनयोः प्रणयनमकरोत्। मैक्समूलरमहोदयाः (1850) पञ्चाशदुत्तराष्टादशशततमे ख्रीष्टाब्दे आक्सफोर्डविश्वविद्यालये भाषाविज्ञानस्य प्राध्यापकोऽभवत्।

**७.४ आफ्रेक्टमहोदयाः-**

आफ्रेक्टमहोदया ऋग्वेदस्य वैज्ञानिकं संस्करणं सम्पादितवन्तः। रोमनलिप्यामिदं सम्पादनं प्रथममासीत्। सम्पादनकाल एकषष्ट्युत्तराष्टादशशततमात्-त्रिषष्ट्युत्तराष्टादशशततमं यावदासीत्। (1869) एकोनसप्तत्युत्तराष्टादशशततमे ख्रीष्टाब्दे संस्कृतग्रन्थानां सूची प्रकाशितम्। ऐतरेय ब्राह्मणस्यापि रोमनलिप्यां विशुद्धं संस्करणं सम्पादितवन्त एते आचार्याः।

**७.५ बेवरमहोदयाः- ( १८२५-१९०१ )**

बेवरमहोदयाः जर्मनविद्वांस आसन्। ''यजुर्वेदसंहिता'' एवं ''तैत्तिरीयसंहिता'' इत्यनयोः सम्पादनमपि कृतवन्तः। ''इनदिशे स्तूदियन्'' नाम्न्येकाशोधपत्रिकायाः जर्मनभाषायां प्रकाशनं कृत्वा वैदिकानुसन्धानस्य कार्यं सम्पादितवन्तः। ''संस्कृत साहित्य का इतिहास'' इत्यस्मिन् ग्रन्थे वैदिकवाङ्मयस्य विवेचनं कृतवन्तः बेवर महोदयाः। बर्लिनदेशस्य राजकीयपुस्तकालये संस्कृतग्रन्थानां सूची निर्मितवन्तः। (1855) पञ्चपञ्चाशदुत्तराष्टादशशततमे वर्षे शतपथब्राह्मणस्य (1858) अष्टपञ्चाशदुत्तराष्टादशशततमे ई. वर्षे अद्भुतब्राह्मणस्य वंशब्राह्मणस्य च बर्लिनदेशे सम्पादनं कृतम्।

**७.६ बूलरमहोदयाः- ( १८३७-१८९८ )**

डॉ.बूलरमहोदयः "बम्बईसंस्कृतसीरीज" नाम्नः ग्रन्थमालायाः प्रकाशनं कृतवान्। (1866) षट्षष्ट्युत्तराष्टादशशततमे ई.वर्षे बम्बईमद्रासबंगालेषु च प्रान्तेषु शोधसंस्थानानि स्थापितानि। बूलरमहोदयाः मुम्बईशाखायाः अध्यक्षा आसन्।

**७.७ प्रो.एच.एच.विल्सनमहोदयाः ( १७८४-१८६० )**

अनेनमहोदयेनैव सायणभाष्यानुसारेण ऋग्वेदसंहितायाः सर्वप्रथममांग्लभाषायामनुवादः कृतम्। सम्पूर्णस्य ऋग्वेदस्य आंग्लभाषानुवादेन सह (1888) अष्टाशीत्युत्तराष्टादशशततमे ई.वर्षे प्रकाशनं कारितम्। विल्सनमहोदयाः Institute of France मध्ये प्राध्यापक आसन्। (1833) त्रयस्त्रिंशदुत्तराष्टादशशततमे ख्रीष्टाब्दे आक्सफोर्ड विश्वविद्यालये Boden Professor of Sanskrit इत्यस्य पदस्योपरि आसीनोऽभवन्। The Religious and Philosophical System of the Hindus नाम्नि पुस्तके भारतीय-धर्मदर्शनस्य वैशिष्ट्यं प्रकाशितवान्।

**८.० ऋक्भाष्यकाराः-**

पुरा काले यथा मानवमस्तिष्कमुर्वरमासीत् तथार्वाचीने काले नास्ति। एतावता यजुर्भाष्ये प्राप्यते मन्दमतीन् मनुष्यान् विचिन्त्य भगवता वेदव्यासेन वेदस्य विभागः कृतम्। मानवानां कृते सुगमतापूर्वकं वेदार्थावबोधाय ब्राह्मणग्रन्थानां निर्माणमभवत्। वेदार्थानुशीलनाय यास्केन निरुक्तस्य रचना कृता। तद्वदेव वेदाङ्गानां प्रातिशाख्यादीनाञ्च रचना वेदार्थज्ञानाय सम्पादिता। पुनरपि सुखावबोधाय भाष्यस्यापि निर्माणं जातम्। वेदभाष्यकर्तृषु स्कन्दस्वामी-आनन्दतीर्थ वेङ्कटमाधव-सायण-महीधरेत्यादयः प्रमुखास्सन्ति।

**८.१ स्कन्दस्वामी-**

ऋक्संहितायाः प्रथमं भाष्यं स्कन्दस्वामीमहोदयस्यैव प्राप्यते। अस्य महोदयस्य भाष्ये सूक्तस्यारम्भे तस्य सूक्तस्य ऋषेः देवस्यचोल्लेखे वर्तते। निघण्टुनिरुक्तप्रभृतिवैदिकार्थोपबोधकेभ्यः ग्रन्थेभ्यः उपयुक्तप्रमाणमपि तत्रैव सङ्कलितमस्ति। भाष्यमिदमतीवसरलं सुगमं मिताक्षरञ्चास्ति। स्कन्दस्वामिमहोदयस्य

भाष्यमृक्संहितायाः चतुर्थाष्टकपर्यन्तमेव प्राप्यते। वेङ्कटमाधवस्य भाष्यानुसारेणैवं प्रतीयते ऋग्वेदस्यावशिष्टभागानां भाष्यं नारायणमहोदयै उद्गीथमहोदयैश्च सम्पादितम्। यथा–

**स्कन्दस्वामी नारायण उद्गीथ इति ते क्रमात्।**
**चक्रुः सहैकमृग्भाष्यं मद्वाक्यार्थगोचरम्॥**

स्कन्दस्वामिनः जन्म गुर्जरप्रदेशस्य बलभी इत्याख्यनगरेऽभवत्। अस्य पितुर्नाम भर्तृध्रुव आसीत्। ऋग्वेदभाष्यस्य प्रथमाष्टकस्यान्ते चर्चितम्–

**बलभीविनिवासस्येतामृगर्थागमसंहृतिम्।**
**भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृतिः॥**

**८.२ नारायणः–**

नारायणमहोदयाः ऋग्भाष्ये स्कन्दस्वामिमहोदयस्य साहाय्यं कृतवन्तः। प्राक्तने श्लोके स्कन्दस्वामी नारायण उद्गीथ इति ते क्रमात् इत्यनेन स्पष्टं भवति ऋग्वेदस्य मध्यभागस्य भाष्यं नारायणेन जातम्। कतिपयविद्वांसः सामभाष्यकर्तुः माधवस्य पितरं नारायणं तथा ऋग्भाष्यकर्तृ नारायणमेकमेव मन्यन्ते। किञ्च अद्यावधिपर्यन्तं सबलप्रमाणमुपलब्धं नास्ति।

**८.३ उद्गीथः**

आचार्याः वेङ्कटमाधवस्यानुसारेण ऋग्वेदस्यान्तिमभागस्य भाष्यमुद्गीथेन कृतम्। प्रत्यध्यायस्य समाप्त्यवसरे– वनवासीविनिर्गताचार्यस्य उद्गीथस्य कृता ऋग्वेदभाष्ये अध्यायः समाप्तः इत्यनेन लेखनेन प्रमाणं दृढें भवति। आधुनिककर्णाटकस्य प्रतीच्यभूखण्डे ''वनवासीप्रान्त'' इत्याख्यातमासीत्। उद्गीथाचार्यः सम्भवत अस्यैव प्रान्तस्य वासी आसीत्। अस्याचार्यस्योल्लेखः सायणेन आत्मानन्देन च स्वस्वभाष्ये कृतः। उद्गीथमहोदयाः सायणतः प्राक्तनभाष्कार आसन्। सायणेन ऋग्वेदस्यैकस्मिन् मन्त्रस्य भाष्ये व्याख्येयम् उद्गीथभाष्ये उपलब्धास्ति इत्युल्लेखः कृतः।

**८.४ आनन्दतीर्थः–**

आचार्याः आनन्दतीर्थमहोदयाः ऋग्वेदस्य प्रथममण्डलस्य चत्वारिंशत् सूक्तेषु भाष्यं लिखितवन्तः। अस्य समयः (1255) पञ्चपञ्चाशदुत्तरद्वादशशततमात् ई.वर्षतः

(1335) पञ्चत्रिंशदुत्तरत्रयोदशशततमम् ई.वर्षमासीत्। अस्यमहोदयस्यानुसारेण वेदस्य प्रतिपाद्यः नारायणोऽस्ति।

**८.५ आत्मानन्दः-**

आत्मानन्दमहोदयः ऋग्वेदस्य अस्यावायीयसूक्तोपरि भाष्यं लिखितवान्। अस्मिन् भाष्ये स्कन्दस्वामी, भास्करादीनां भाष्यकर्तृणाञ्च नामानि प्राप्यन्ते परञ्च सायणस्य नाम नास्ति। सायणस्य पूर्ववर्तिन आचार्या आसन् आत्मानन्दमहोदयाः। आत्मानन्देन मिताक्षराकारस्य विज्ञानेश्वरस्य स्मृतिचन्द्रिकाकारस्य देवणभट्टस्य च वर्णनं कृतम्। विज्ञानेश्वरस्य काल एकादशशाताब्द्यां देवणभट्टस्य च कालः त्रयोदशशताब्द्यामासीत्। आत्मानन्दस्यभाष्यम् आध्यात्मविषयकमस्ति।

**८.६ सायणः-**

भाष्यकर्तृणामाचार्याणां मध्ये बहुविश्रुता आचार्याः सन्ति सायणमहोदयाः। सायणेन चतुर्षुवेदेषु महत्त्वपूर्णं भाष्यं लिखितम्। ऋग्वेदस्य शाकलसंहितायाः कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायाः शुक्लयजुर्वेदस्य काण्वसंहितायाः, सामवेदस्य कौथुमसंहितायाः, अथर्ववेदस्य शौनकसंहितायाश्च भाष्यं कृतवन्तः सायणमहोदयाः। अनन्तरं ब्राह्मणग्रन्थानामुपर्यस्य महोदयस्य भाष्यं प्राप्यते। एतरेयारण्यकोपरि सायणमहोदयस्य भाष्यं प्राप्यते। सायणस्य स्वकीयस्य वेदभाष्यस्य नाम वेदार्थप्रकाशो विद्यते। सायणस्यैका रचना ''माधवीयाधातुवृत्तिः'' इति नाम्नाख्यातमस्ति। एतदतिरिक्तं कतिपयेषु ग्रन्थेषु ''माधवीय'' इत्यस्य शब्दस्य प्रयोगः दृश्यते। अस्याग्रजस्य नाम माधव आसीत्। सम्भाव्यते आदरार्थे ''माधवीय'' इत्यस्य पदस्य प्रयोगमेभिः कृतम्।